श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीशङ्कराचार्य विरचितं

# ॥ अच्युताष्टकम् ॥

*This document* has been prepared by*

**Sunder Kidambi**

*with the blessings of*

**श्री रङ्गरामानुज महादेशिकन्**

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ अच्युताष्टकम् ॥

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम्।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे॥ १ ॥

अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम्।
इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं सन्दधे॥ २ ॥

विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये।
वल्लवी वल्लभायाऽर्चितायात्मने कंसविध्वंसिने वंशिने ते नमः॥ ३ ॥

कृष्ण गोविन्द हे रामनारायण श्रीपते वासुदेवाजित श्रीनिधे।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक॥ ४ ॥

राक्षसक्षोभितः सीतयाशोभितो दण्डकारण्यभूपुण्यता कारणः।
लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम्॥ ५ ॥

धेनुकारिष्टकानिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः।
पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा॥ ६ ॥

विद्युदुद्योतवत् प्रस्फुरद्वाससं प्रावृडंभोदवत् प्रोल्लसद्विग्रहम्।
वन्यया मालया शोभितोरस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे॥ ७ ॥

कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः।
हारकेयूरकं कङ्कणप्रोज्ज्वलं किङ्किणीमञ्जुलं श्यामलं तं भजे॥ ८ ॥

अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम्।
वृत्ततः सुन्दरं कर्तृविश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम्॥ ९ ॥

॥ इति अच्युताष्टकं समाप्तम् ॥